# MAṆIMAÑJARĪ

# मणिमञ्जरी

*By*

"BOMMAKANTI"

*Foreword by*

DR VASUDEVA SHARANA AGRAWALA,
M A., PH D., D Litt.,
Professor, College of Indology, Banaras Hindu University,
President-Elect, All India Oriental Conference

1962

# समर्पणम्

१ साहित्यसौहित्यविलासमूर्ति
वैदुष्यवैदग्ध्यवरेण्यचेता ।
सौजन्यसौहृद्यपवित्रवृत्त
चकास्ति श्रीबूर्गुलरामकृष्ण ॥

२. स्वातन्त्र्यरणरङ्गेषु सेनानीरेष गीयते
प्रजाहितविनीतेषु धौरन्धर्येण कल्प्यते ॥

३ मन्त्रित्वराज्यपालत्वराज्यसभ्यत्वसम्पदा
त्रिविक्रमत्वमापेदे रामकृष्ण! भवान्ननु ॥

४. ससाङ्गनिपुणो वाग्मी प्रशासनकलानिधि
गाम्भीर्यजलधिर्धीमानान्ध्राणामधिनायक ॥

५. श्रीरङ्गनायकाम्बा-
नरसिंहौ पुण्यदम्पती पितरौ ।
यस्य सुगृहीतनाम्न
स जगति सतामग्रणीर्जयति ॥

६. एवगुणगणनिधये
श्री बूर्गुलकुलपयोधिहिमधृणये ।
श्रीरामकृष्णविदुषे
मणिमञ्जरी समर्पितेयम् ॥

# FOREWORD

SHRI B R SHASTRI is a master of Sanskrit learning, having studied this ancient language both by the traditional and modern methods He has given solid proof, if such were needed, that Sanskrit is an immortal language, not only by the continuity of its overwhelming meaning but also in its outer form The meaning made permanent in Sanskrit literature is the life sap in which the various languages and literatures of India are soaked to the skin. The cosmic and human appeal of Sanskrit thought belongs not only to India but is a part of the world heritage for humanity The compassionate and universal outlook of Sanskrit represents the voice of India and is mingling more and more with the ideals and the aspirations of mankind today

But that the stream of the literary form that supplied its dynamic force to the continuity of Sanskrit has come to our own times, is demonstrated by a number of original Sanskrit writings by authors all over the country during recent years To this noble band belongs Shri B R Shastri His *Manimañjarī* is a collection of a few one act plays and lyrics in Sanskrit which make instantaneous appeal by their charming simplicity and melody of diction

One is impressed as if the author is evolving a new experiment in Sanskrit style and using it as a convincing argument in favour of accepting Sanskrit as the vehicle of national expression

It has gladdened my heart to look through देवयानी, यामिनी, शोकश्लोकत्वमागत, गांधिचरितम् and गेयावलि, the selection of lyrics. How I wish Shri Shastri be inspired to write a full life of Mahatma Gandhi in the form of a Sanskrit poem like the Buddha Charitam of Asvaghosha ! May goddess Sarasvati shower her grace on him

V S AGRAWALA
*Professor,*
Banaras Hindu University

12-9-62

# विज्ञापना

अयि सन्त !

भवता मुदे मणिमञ्जरीयं प्रकाश्यते।

अस्या कृतावेते विषया सन्दब्धा —देवयानीरूपकस्य वस्तु महाभारते वर्णितादितिवृत्तादुद्धृतम्, लोके विश्रुता कविबिल्हणकथामालम्ब्य 'यामिनी' रूपिता, 'शोक श्लोकत्वमागत' इत्यभिधानात् स्वीयादुपकाव्यादत्र त्रय एव सर्गा अग्रतो निवेशिता, मदीयात् गान्धिचरितादेक एव अध्यायो गृहीत, अन्ते च कानिचन गेयानि निहितानि।

अत्र प्रकाशितासु रचनासु काश्चन आकाशवाणी, हैदराबाद संस्थया प्रसारिता आसन्।

अधीत्य चेमां कृतिं कृतिन केचिन् महता कण्ठेन यदि व्याहरेयु "ननु त्वया तत्र तत्र परम्परा नादृता। पदसन्धिषु शैथिल्यमाविष्कृतम्" तान् प्रति सविनय मिद निगदाम "अये प्रणयिन ! नैषा शास्त्ररूढिमत्येतुमीहेति मन्तव्यम्। यदेतत् तत्र तत्र पदानां पृथक्त्वेन प्रदर्शन तदर्मवैशद्याय प्रभवतीत्याशास्महे।"

अस्या मणिमञ्जर्या कृतिपतित्वमङ्गीकृत्य मामनुगृहीतवद्भ्य श्री बूर्गुल राम कृष्णमहाशयेभ्य अहमतीव कृतज्ञ। पाण्डितीसौजन्यस्वरूपा श्रीवासुदेवशरण अग्रवाल-महोदया मम प्रार्थनामुररीकृत्य मणिमञ्जरीमेतां प्राक्कथनेन अलमकार्षु। अहमेतेभ्य हार्दिककृतज्ञतां प्रकटयामि। डा॰ आर्येन्द्रशर्मभ्य, उस्मानियाविश्वविद्यालयसंस्कृतविभागाध्यक्षेभ्य अह भूरिकृतज्ञ। अस्मिन्नेवावसरे साहित्यमहारथेभ्य श्रीदेवुलपल्लि वेङ्कटकृष्ण शास्त्रिवर्येभ्य धन्यवादान समर्पयामि। कविसहृदया 'अजन्ता प्रिण्टर्स' अधिपतयोऽप्यत्र मम धन्यवादानर्हन्ति।

विपश्चित प्रस्तुतेय विनयान्मणिमञ्जरी।<br>
विदुषां परितोषाय क्लृप्तिरेषा भवेन् मम॥

सज्जनविधेय

**योम्मकण्टि रामलिङ्गशास्त्री**

# विज्ञापना

अयि सन्त !

भवतां मुदे मणिमञ्जरीयं प्रकाश्यते ।

अस्यां कृतावेते विषया सन्दृब्धा —देवयानीरूपकस्य वस्तु महाभारते वर्णिता-दितिवृत्तादुन्नीतम् , लोके विश्रुतां कविबिल्हणकथामालम्ब्य 'यामिनी' रूपिता, 'शोक श्लोकत्वमागत' इत्यभिधानात् स्वीयादुपकाव्यादत्र त्रय एव सर्गा अतो निवेशिता , मदीयात् गान्धिचरितादेक एव अध्यायो गृहीत , अन्ते च कानिचन गेयानि निहितानि ।

अत्र प्रकाशितासु रचनासु काश्चन आकाशवाणी, हैदराबाद संस्थया प्रसारिता आसन् ।

अधीत्य चेमां कृतिं कृतिन केचिन् महता कष्टेन यदि व्याहरेयु "ननु त्वया तत्र तत्र परम्परा नादृता। पदसन्धिषु शैथिल्यमाविष्कृतम्" तान् प्रति सविनय मिद निगदाम 'अये प्रणयिन ! नैषा शास्त्ररूढिमस्त्येतुमीहेति मन्तव्यम्। यदेतत् तत्र तत्र पदानां पृथक्त्वेन प्रदर्शन तदर्थवैशद्याय प्रभवतीत्याशास्महे।"

अस्या मणिमञ्जर्या कृतिपतित्वमङ्गीकृत्य मामनुगृहीतवद्भ्य श्री बूर्गुल राम कृष्णमहाशयेभ्य अहमतीव कृतज्ञ । पाण्डितीसौजन्यस्वरूपा श्रीवासुदेवशरण अग्रवाल-महोदया मम प्रार्थनाभुररीकृत्य मणिमञ्जरीमेतां प्राक्कथनेन अलमकार्षु । अहमेतेभ्य हार्दिककृतज्ञतां प्रकटयामि। डा० आर्येन्द्रशर्मभ्य , उस्मानियाविश्वविद्यालयसंस्कृतविभागाध्यक्षेभ्य अह भूरिकृतज्ञ । अस्मिन्नेवावसरे साहित्यमहारथेभ्य श्री देवुलपल्लि वेङ्कटकृष्ण शास्त्रिवर्येभ्य धन्यवादान समर्पयामि। कविसहृदया 'अजन्ता प्रिण्टर्स' अधिपतयोऽप्यत्र मम धन्यवादानर्हन्ति ।

विपश्चित !प्रस्तुतेय विनयान्मणिमञ्जरी ।  
विदुषां परितोषाय क्लृप्तिरेषा भवेन मम ॥

सज्जनविधेय  
**बोम्मकण्टि रामलिङ्गशास्त्री**

# विज्ञापना

अयि सन्त !

भवता मुदे मणिमञ्जरीयं प्रकाश्यते।

अस्या कृतावेते विषया सन्दृब्धा —देवयानीत्यकस्य वस्तु महाभारते वर्णिता-दितिवृत्तादुन्नीतम् , लोके विश्रुतां कविबिल्हणकथामालम्ब्य 'यामिनी' रूपिता , 'श्लोक श्लोकत्वमागत ' इत्यभिधानात् स्वीयादुपकाव्यादत्र त्रय एव सर्गा अत्रतो निवेशिता , मदीयात् गान्धिचरितादेक एव अध्यायो गृहीत , अन्ते च कानिचन गेयानि निहितानि।

अत्र प्रकाशितासु रचनासु काश्चन आकाशवाणी, हैदराबाद संस्थया प्रसारिता आसन्।

अधीत्य चेमां कृतिं कृतिन केचिन् महता कण्ठेन यदि व्याहरेयु "ननु त्वया तत्र तत्र परम्परा नादृता। पदसन्धिषु शैथिल्यमाविष्कृतम्" तान् प्रति सविनय मिद निगदाम "अये प्रणयिन ! नैषा शास्त्रदृढिमत्यैनुमीहेति मन्तव्यम्। यदेतत् तत्र तत्र पदानां पृथक्त्वेन प्रदर्शन तदर्थवैशद्याय प्रभवतीत्याशास्महे।'

अस्या मणिमञ्जर्या कृतिपतित्वमङ्गीकृत्य मामनुगृहीतवद्भ्य श्री बूर्गुल रामकृष्णमहाशयेभ्य अहमतीव कृतज्ञ। पाण्डितीसौजन्यस्वरूपा श्रीवासुदेवशरण अग्रवाल-महोदया मम प्रार्थनामुररीकृत्य मणिमञ्जरीमेतां प्राक्कथनेन अलमकार्षु। अहमेतेभ्य हार्दिककृतज्ञतां प्रकटयामि। डा॰ आर्येन्द्रशर्मभ्य , उस्मानियाविश्वविद्यालयसंस्कृतविभागाध्यक्षेभ्य अहं भूरिकृतज्ञ। अस्मिन्नेवावसरे साहित्यमहारथेभ्य श्रीदेवुलपल्लि वेङ्कटकृष्ण शास्त्रिवर्येभ्य धन्यवादान् समर्पयामि। कविसहृदया 'अजन्ता प्रिण्टर्स्' अधिपतयोऽप्यत्र मम धन्यवादानर्हन्ति।

विपश्चित !प्रस्तुतेय विनयान्मणिमञ्जरी।
विदुषां परितोषाय क्लृप्तिरेषा भवेन्न मम॥

सज्जनविधेय
बोम्मकण्टि रामलिङ्गशास्त्री

# अनुक्रमणिका



---

तस्मिन् कदा स्यात्प्रशमावकाशः ॥ १९ ॥

# पात्राणि

ययातिः—राजा
दन्तिलः—राज्ञः सहाय.
शुक्रः—राक्षसानां गुरुः
शापपुरुष.—शुक्रेण दत्तः शापः

देवयानी—शुक्रस्य दुहिता
शर्मिष्ठा—वृषपर्वणः दुहिता
चूर्णिका—देवयान्याः धात्री
पुष्करिका—शर्मिष्ठायाः सखी

## स्थानानि

मरुसीमायां शैलः—वृषपर्वणः नगर्याः उपकण्ठम्—प्रतिष्ठानपुरम्—
प्रमदवनम्—अन्त.पुरम् ।

तस्मिन् कदा स्यान्नराणामकाराः ॥ १९ ॥

## प्रथमं दृश्यम्

[ शङ्खरावः–नान्दी–सर्वे ]

रागरोषावेशभरितं देवयानीचरितम् ।
प्रस्तूयते भवतां मुदे रसिका विलोकयतादरात् ॥

[ वाद्यम् ]

देवयानी—[उच्चैः] म्रियेऽहम् म्रियेऽहम् । हन्त, कोऽपि नायाति । परित्रायताम् परित्रायताम् । घूर्णिके ! कूपे पतिताहम् । वनदेवते ! हा पितः ! एषा तव दुहिता एवं सीदति !... हन्त एषा लतापि मयि अकरुणा जाता !

ययाति :—कष्टं भोः कष्टं मानवस्य जीवितं नाम । असारं सर्वं जगत् ।.... नेत्रे मे न पश्यतः ।....मूर्धा भ्रमति ।....एषा पापमयी जिह्वा अन्तः कृष्यते ।....किं करोमि ? क्व यामि ? अकस्मादेव सेनायाः परिभ्रश्य सुदारुणमिदं मृत्युमुखं वनं प्राविशम् ।....तृष्णे ! किं मा बाधसे ? शरीर ! किं ज्वलसि ?....पादौ न चलतः । अयि पापिन् ! ययाते ! कथं त्वमात्मानं मृत्युमुखात् मोचयसि ? इतस्ततः जलाय भ्रमन्नेव भूमौ पतित्वा म्रिये. .

पञ्चविंशतिवर्षोऽहं शतजीर्ण इवाभवम् ।
अहो दशाविपर्यासः प्राणिनामीदृशी गतिः ॥

देव :—(सविषादम्) अस्मिन्नन्धे कूपे पतिताहम् । .... (सकरुणम्) हा तात ! करुणामय ! म्रियेऽहमिति नास्ति मे विषादः । मया विना त्वं कथं जीवसि इति हृदये बलवद्विदीर्ये । (उच्चैः) परित्रायताम् । अहमस्मिन् कूपे.... (अर्धोक्तम्)

यया :—अये किमेतत् ?

देव —अहं शुक्रस्य दुहिता।

यया —अस्मिन्निर्जने वने आर्तनाद इव श्रूयते। तत् कुतो नु खलु एषा दीना वाणी ?

देव —दीना कूपेऽत्र पातिता।

यया —स्वरस्य संवादेन जानामि काचित् मन्दभागिनी विक्रोशतीति आम् ज्ञातम्। एषा वाक् दक्षिणत आगच्छति। किमेषा भणति ? धावामि तत्रैव (धावति)

देव —(उच्चैः) म्रियेऽहमुदके मग्ना।

यया —धावामि (वेगेन धावति) (उच्चैः) न भेतव्यम्। न भेतव्यम्।

देव —शर्मिष्ठे! सफला भव।

यया —न भेतव्यम्। अहं ययातिः त्वाम् त्रातुम् जीवितमपि जहामि (कूपे पश्यति)

देव —अयि तात! तात! (निमज्जति)

यया० —हन्त अतीव दारुणम् खलु सञ्जातम्। एतस्या आर्तनादः दिशः दश निनादयन् मामत्र आकृष्य एकपदे विरतः चिरायितेन मया एषा मारिता। महत्पापमद्य मया समासादितम्। किं करोमि ? एषा अन्तकस्यापि सकाशात् मोक्तव्या कूपे निपतामि। (तथा करोति) [जले रवः] (सहर्षम्) एषा मया समासादिता। कूपाद् बहिर् एष्यामि एतां स्कन्धे गृह्णामि (किंचिद् दूरं गच्छति) अस्य किंशुकस्याधस्तादेनां निक्षिप्य परिचरामि (तथा करोति) सम्मूर्च्छितापि एषा निश्वसितुमारभते। अद्य जिता मया सर्वे लोकाः। वीजयामि एनाम्।

देव —(संज्ञां लब्ध्वा) हन्त नाहमुपरता भद्रपुरुष! कारुणिक! तच्च कूपपतनं सस्मृत्य अधुनापि .

यया —अबले ! अधुनापि वित्रस्तासि ? प्रकृतिमापद्यस्व। एष ययाति नहुषस्य पुत्र तव रक्षक भूत्वा अत्रैव तिष्ठति ।

देव —(स्वगतम्) हन्त ! कूपभ्रश महते उपकाराय कल्पते यदिदानीम् एष साक्षात्कृत राजन् ! एतै सुधामयै वाक्यै एतौ कर्णौ सिञ्चन् मामुज्जीवयसि । देव ! मन्दभागिनी खलु अह या त्वामेवमपीडयम् । तन् मा क्षन्तुमर्हसि ।

यया —सुभ्रु ! कूपादुद्धर्तुं त्वामह गात्रेषु अस्पृशम् । तदतिक्रमण मर्षय । यदि न गोप्य कथ त्वमीदृशीमवस्था नीतेति ज्ञातुमिच्छामि।

देव —राजन्! इमे मम प्राणा तव अधीना । त्वया दत्तमिद जीवित तवैव । नास्ति तव परकीय मयि किंचित् । अस्ति खलु राक्षसाना राजा वृषपर्वा नाम ।

यया —जानामि भद्रे ! जानामि ! यस्य लोकवन्द्य शुक्र गुरु ।

देव —महाराज ! तस्य प्रथितकीर्ते शुक्राचार्यस्य अह प्रिया दुहिता देवयानीति ।

यया —ब्राह्मणपुत्रि ! पुण्येन त्वामहमपश्यम् । शुक्राचार्यमिव त्वा वन्दे। तत् कथमेष विपर्यय ?

देव —तस्य राक्षसराजस्य दारिका दर्पमूर्विष्ठा शर्मिष्ठा नाम (अर्धोक्तम)

यया —तया मद्धवैरया एतामवस्था नीता ?

देव —तया अकारणमस्मिन् कूपे पातिता।

यया —नून तया अकरुणया भवित य या (अर्धोक्तम्)

देव —देव ! (सरोषम्) अनात्मज्ञा न जानाति मा देवयानीम् । फलमधुनैव प्राप्स्यति । सर्पिणी भूत्वा दशामि एनाम् । काल भूत्वा प्राणानाहरामि ।

यया —ब्राह्मणपुत्रि ! प्रचण्डासि ।

देव —अहं शुक्रस्य दुहिता ।

यया —अस्मिन्निर्जने वने आर्तनाद इव श्रूयते । तत् कुतो नु खलु एषा दीना वाणी ?

देव —दीना कूपेऽत्र पातिता ।

यया —स्वरस्य संवादेन जानामि काचित् मन्दभागिनी विक्रोशतीति आम् ज्ञातम् । एषा वाक् दक्षिणत आगच्छति । किमेषा भणति ? धावामि तत्रैव (धावति)

देव —(उच्चै ) म्रियेऽहमुदके मग्ना ।

यया —धावामि (वेगेन धावति) (उच्चै ) न भेतव्यम् । न भेतव्यम् ।

देव —शर्मिष्ठे ! सफला भव ।

यया —न भेतव्यम् । अहं ययाति त्वाम् त्रातुम् जीवितमपि जहामि (कूपे पश्यति)

देव —अयि तात ! तात ! (निमज्जति)

यया० —हन्त अतीव दारुणम् खलु सञ्जातम् । एतस्या आर्तनाद दिश दश निनादयन् मामत्र आकृष्य एकपदे विरत चिरायितेन मया एषा मारिता । महत्पापमद्य मया समासादितम् । किं करोमि ? एषा अन्तकस्यापि सकाशात् मोक्तव्या कूपे निपतामि । (तथा करोति) [जले रव ] (सहर्षम्) एषा मया समासादिता । कूपाद् बहिर् एष्यामि एता स्कन्धे गृह्णामि ( किंचिद् दूर गच्छति ) अस्य किंशुकस्याधस्तादेना निक्षिप्य परिचरामि (तथा करोति) सम्मूर्च्छितापि एषा निश्वसितुमारभते । अद्य जिता मया सर्वे लोका । वीजयामि एनाम् ।

देव —(सज्ञा लब्ध्वा) हन्त नाहमुपरता भद्रपुरुष ! कारुणिक ! तव कूपपतन सस्मृत्य अधुनापि

यया —अबले ! अधुनापि वित्रस्तासि ? प्रकृतिमापद्यस्व । एष ययाति नहुषस्य पुत्र तव रक्षक भूत्वा अत्रैव तिष्ठति ।

देव —(स्वगतम्) हन्त ! कूपभ्रंश महते उपकाराय कल्पते यदिदानीम् एष साक्षात्कृत राजन् ! एतै सुधामयै वाक्यै एतौ कर्णौ सिञ्चन् मामुज्जीवयसि । देव ! मन्दभागिनी खलु अह या त्वामेवमपीडयम् ! तत् मा क्षन्तुमर्हसि ।

यया —सुभ्रु ! कूपादुद्धर्तुं त्वामह गात्रेषु अस्पृशम् । तदतिक्रमण मर्षय । यदि न गोप्य कथ त्वमीदृशीमवस्था नीतेति ज्ञातुमिच्छामि।

देव —राजन् ! इमे मम प्राणा तव अधीना । त्वया दत्तमिद जीवित तवैव । नास्ति तव परकीय मयि किंचित् । अस्ति खलु राक्षसाना राजा वृषपर्वा नाम ।

यया —जानामि भद्रे ! जानामि ! यस्य लोकवन्द्य शुक्र गुरु ।

देव —महाराज ! तस्य प्रथितकीर्ते शुक्राचार्यस्य अह प्रिया दुहिता देवयानीति ।

यया —ब्राह्मणपुत्रि! पुण्येन त्वामहमपश्यम् । शुक्राचार्यमिव त्वा वन्दे। तत् कथमेष विपर्यय ?

देव —तस्य राक्षसराजस्य दारिका दर्पभूयिष्ठा शर्मिष्ठा नाम (अर्धोक्तम)

यया —तया बद्धवैरया एतामवस्था नीता ?

देव —तया अकारणमस्मिन् कूपे पातिता।

यया —नून तया अकरुणया भवित य या (अर्धोक्तम्)

देव —देव ! (सरोषम्) अनात्मज्ञा न जानाति मा देवयानीम् । फलमधुनैव प्राप्स्यति । सर्पिणी भूत्वा दशामि एनाम् । काल भूत्वा प्राणानाहरामि ।

यया —ब्राह्मणपुत्रि ! प्रचण्डासि ।

देव —एषा दास्याः पुत्री मम दासी भवितुमपि नार्हति। मा च शुक्रस्य दुहितरं प्रति वैरायते।

यया —भामिनि ! दहनमपि दहेत् ब्राह्मं तेजः। नूनं नष्टा सा वराकी।

देव —राजन् ! बहु अपराद्धं मया। अत्रभवन्तमेवम् असम्बद्धैरालापै आयासयामि।

यया —देवयानि ! अत्रभवती कूपादुद्धृत्य मम पितृदेवानहम् अतिमात्रम् आराधयम्।

देव —देव ! (सरागम्) अयि जीवितनाथ ! मा तव दासीं विधेहि।

यया —अयि शुक्रपुत्रि ! किमिदं व्यवस्यसि ? (ततः प्रविशति चूर्णिका)

चूर्णिका —चिरायते देवयानी तदत्र तामन्विष्यामि आः किमेतत् ? (शनैः) कोऽयं महाभागः ? अत्रैव भूत्वा सर्वमवेक्षे।

देव —त्वयि बद्धरागां मां करुणेन चक्षुषा पश्य।

यया —नास्ति धर्मव्यतिक्रमणे शक्तः।

देव —कोऽयमधर्मो नाम। न मां पश्यसि ? पुलकयति मम देहं।

यया —वामे ! अहं त्वामामन्त्रये।

देव —वल्लभ ! त्वां विना क्षणमपि जीवितुं नोत्सहे। मां कूपात् किमिति उद्धृतवान् ? कठोर ! मां कूपे प्रक्षिप्य गच्छ। (कूपं प्रति धावति)

चूर्णि —वत्से ! विरम विरम दुर्व्यवसायात् ! (देवयानीं गृह्णाति)

यया —शुक्रदुहितः ! परवशोऽस्मि धर्माचरणे। स्वस्ति तेऽस्तु (निष्क्रामति)

देव —चूर्णिके ! कथमत्रागतासि ? मुञ्च माम्। एष गच्छति मम हृदयमादाय। मृतमिदं मम शरीरं कूपसात् करोमि।

चूर्णिः—वत्से ! मयि विश्वसिहि । समाश्वसिहि ।

देव :—एष मम मनोरथमसम्पूर्य एव याति ।

चूर्णिः—शुद्धभावे ! नास्ति तातस्य अशक्यं नाम । उपायेनैव सिद्ध्यति कार्यम् । पिता ते मनोरथं संपादयिष्यति ।

देव :—(सावलेपम्) तर्हि गच्छ त्वम् । शर्मिष्ठा मम दासी भवेत् । ययातिः मां परिणयेद् । एतौ मम मनोरथावसपूर्य नाहमितः पदमपि प्रचलामि ।

चूर्णिः—अहं तव पितरं वृत्तान्तमेतं विज्ञाप्य इत एव आनयामि । त्वमत्रैव मयि दयालुः तिष्ठ ।

---

## द्वितीयं दृश्यम्

[ गीतम् ]

उदेति हृदये मधुरो भावः
स्मये रमे परवशतामेमि ॥

(ययातिः दन्तिलश्च प्रविशतः)

यया :—दन्तिल ! अस्मिन् पर्वतप्रस्थे कुतः इयं मधुरा गीतिः । अनया गीत्या मम हृदयम् उच्छ्वसिति ।

दन्ति :—वयस्य ! नास्ति अत्र कस्यापि अपराधः यदि भवान् एवं दुर्गतः सञ्जातः । अहं पुनरेतं गुंगुरारवं द्वेष्मि । कर्णौ पिदधामि । भवानपि मामनुगच्छतु ।

यया :—मन्दभाग्य ! क्षणं तूष्णीम् आस्स्व । नन्दावः तावत् ।

[ गीतम् ]

उदेति हृदये मधुरो राग·
सये रमे प्रियदर्शनामेमि
आयतनयन सुस्मितवदन
मधुरालाप मञ्जुलरूप
मोहनचरित जीवितनाथ
ध्यायामि त्वा सुन्दर! सततम्
उदेति [ ध्रुवपदम् ]

दन्ति —सहृदय! वानरीणामिव अत्र स्त्रीणा किलकिलाराव!

यया —किमिति विषीदसि!

स्त्रीणामयं गीतराग हृदय हरतीव मे।
भूषणस्वनसम्मिश्र· नृत्यवादित्रमूर्च्छित·॥

दन्तिल! एतत्पुनर्ज्ञातुमिच्छामि कथमेता अत्र समागता इति। गच्छ तरुगुल्मलतावृतमेतद्वनम्।

दन्ति —सखे! नाहम् गच्छामि।

यया —कुत इति न जानामि।

दन्ति —प्रभो! एतदपि विज्ञाप्यम् यदह स्त्रीभ्य बिभेमि (क्षौति) विशेषत सङ्घीभूताभ्य इति।

यया —(विहस्य) अह त्वा पृष्ठत अनुगच्छामि। नास्ति ते भयम्। अत्र छायायाम् तिष्ठामि। कुरु मम प्रियम्।

दन्ति —(किञ्चिद्दूर याति–निवर्तते) अहमिव त्वमपि मन्द। किमर्थं मया तत्र गन्तव्यम् इति अनुक्त्वा एव गच्छ-गच्छ इति वदसि।

यया —दन्तिल! चतुरोऽसि। तत्र गत्वा ता वद "ययाति राजा युष्मान् सर्वा अभिवादयते, गीतेन सान्ते हृष्ट" इति च।

दन्ति —यद्भवान् आज्ञापयति। त्वमत्रैव तिष्ठ। अयमहम् आगच्छामि। ( निष्क्रामति )।

यया —

सङ्गीत नृत्यमालेख्य साहित्य यौवन भुवि।
सर्वमेतच्छरीरस्य जीवितस्य रसायनम्॥

किमिदमुच्चै श्रूयते ?

दन्ति —(आगत्य उच्चै ) भट्टारक ! भट्टारक ! आह्वयन्ति अत्र एता कन्या त्वाम्।

यया —नारिश ! मा उच्चै वद। नय माम् तासाम् सकाशम्।

दन्ति —त्वमग्रतो याहि। अह त्वामनुगच्छामि। त्वा दृष्ट्वा सर्वा कन्या स्मियन्ति मुह्यन्ति च।

यया —गच्छ, कथमेषा देवयानी शुक्रस्य दुहिता ! इयमपरा का ?

केय सर्वानवद्याङ्गी कुन्दश्वेता शुभानना
मनोभिरामा मङ्गल्या अक्लेशार्हा सुखोचिता ?
सवाहयन्ती चरणौ देवयान्या अधोमुखी
नेत्राभ्यामश्रुपूर्णाभ्या कार्पण्यमिव मुञ्चति॥

देव —राजन् ! अभिवादये स्वागत ते। चिरेण दिष्ट्या दृष्टोऽसि।

यया —कथमत्रभवत्या अत्रागमनम् ? मृगयामतिस्तु अत्रागताऽस्मि।

दन्ति —मृगयाया पश्चात् मृगाक्षी अवलोकयसि तुष्यसि रमसे च। (सर्वा हसन्ति)

देव —दैवेनैव अहमत्र आनीता। सखि ! आसने उपनय अत्रभवद्भ्याम्।

यया —कापि वेला प्रतिष्ठानादागतस्य मे। तदहम् आमन्त्रये त्वाम्।

दन्ति —वयस्य! किं तव राज्यतन्त्रेण? एतासां प्रियमातिथ्यं गृह्णन्तौ आवां अत्रैव वस्तुं मनः करवाव। कापि शोभा एतासां सुन्दरीणां। (सर्वाः हसन्ति)

यया —मुखर! मा जल्प।

देव —राजन्! अतिथिरसि। सुहृदसि। जानामि अत्रभवतः मां दासीं प्रति अनुकम्पाम्। मम गुरोः अभिमतमनुतिष्ठ।

यया —अत्रैव विद्यते लोकवन्द्यः शुक्रः?

देव —अथ किम्।

यया —तर्हि गुरुपादान् प्रणम्यैव गच्छामि।

देव —राजन्! आत्मानं श्रेयसा योजय।

दन्ति —भवति! किं वदसि! अस्य अचिरमेव मौलिः भावि इति मम दक्षिणं नयनं वदति।

(ततः प्रविशति शुक्रः)

शुक्रः —

क एष पृथुलोरस्कः सुसंस्थानो महाभुजः।
भानुमूर्तिर्वीरवरः प्रह्लादयति मे मनः॥

देव —तात! मयि प्रसीदति एष राजा ययातिः।

यया —ब्रह्मन्! अभिवादये।

शुक्रः —राजन् स्वस्ति ते। अहमेव आयुष्मन्तं प्रतिष्ठाने द्रष्टुकामः। दिष्ट्या त्वमेवात्रागतोऽसि।

यया —अनुगृहीतोऽस्मि।

देव —तात! एष एव मां कूपात् उद्धृत्य मयि अकरुणं गतः। (अपवारितम्)

शुक्र —वत्से ! त्वयि सानुकम्प एव अय राजर्षि । अहमेव एनं अभ्यर्थये ।

यया —आज्ञापयतु देव ।

शुक्र —राजन् ! अहमेता मम दुहितर तुभ्य दातुमिच्छामि । एता परिगृहाण । मयि प्रसीद ।

यया —देव ! क्षमस्व मम अविनयम् । अधर्मे कोऽयम् आयास इति बल्वत् पीड्ये ।

शुक्र —आर्य ! अतिमात्र परितुष्टोऽस्मि । नाह लेशतोपि अधर्मं पश्यामि ।

वत्सा ममैषा त्वयि बद्धमानसा
अह च तस्या जनकः प्रदायक ।
व्यपैतु शङ्का तव वर्णसङ्करे
एषा व्यवस्था भुवि शाश्वती भवेत् ॥

यया —गुरुवचनात् परवशोऽस्मि सवृत्त ।

दन्ति —कन्या ! प्रिय मे । प्रिय मे । वयस्य ! स्वच्छन्द बद्ध ।

शुक्र —

सप्तार्चिर्युवयोर्विवाहसमये साक्षी सुधाशु शुभ
देयात् त्वत्कुलदैवत महितया राज्यश्रिया सम्भृत ।
गार्हस्थ्य भज कीर्तिमाप्नुहि परा पित्रा स्वय वर्धिता-
मेता त्वामनुवर्तिनीं मम सुता धर्मे स्थित. पालय ॥

यया —अनगृहीतोऽस्मि ।

---

## तृतीयम् दृश्यम्

यया —एषा अशोकवनिका नितरामद्य रमणीया दृश्यते । स्मृत्वा च शर्मिष्ठा हृदय मे द्रवति । कथमेषा जीवति अत्र । सा मम

हृदये विहरतीव सर्वेषु कालेषु । पुष्करिकायाः वचनं स्मृत्वा अतिमात्रं खिद्यामि । इदानीमेषा अस्वस्था इति श्रूयते....तां द्रष्टुं त्वरते मम हृदयं....आः के एते इत आगच्छतः ? शर्मिष्ठा पुष्करिका च ।....लतान्तरितो भूत्वा एते पश्यामि ।

( शर्मिष्ठा पुष्करिका च प्रविशतः )

पुष्करिका :—भर्तृदारिके ! एष एव तव प्रियः अशोकपादपः ।

शर्मिष्ठा :—नूनं त्वया बहु उपकृतं मम मन्दभागिन्याः ।

पुष्क :—अत्रैव त्वमुपविश....अहं तव दूती भूत्वा राजानं ययातिम् अत्रानयामि ।

शर्मि :—सखि ! कदापि देवः मयि प्रसीदेत् ? .... अनाथायां मयि राजा अनुरज्यते न वा इति तर्कयामि....द्रुतमायाहि राज्ञा सह ।

पुष्क :—भर्तृदारिके ! अधुनैव मया सह संप्राप्तं राजानमीक्षस्व....एषाहमागच्छामि.........(निष्क्रामति)

यया :—(नीचैः) एष दासः त्वयि अनुरज्यते इति नात्र विशेषः । शर्मिष्ठे ! त्वयि असाधारणं रूपं बुद्धिः गुणः चरितं च अन्योन्यम् अतिरिच्य वर्तन्ते । मयि जीवत्यपि दैवहतकेन त्वं बलवत् त्रस्ता इति विषीदामि ।....

शर्मि :—(साशङ्कम्) अपि नाम ययातिः मयि अनुकम्पते ? यदि दर्शनेनापि मामनुगृह्णाति....राजन् ! त्वं मम नयनयोः सदा वर्तसे.... (सविषादम्) नाहं जन्मदासी । अहमपि राजदुहिता ।....दैवेन इमामवस्थां प्रापिता....(रोदिति) अशरणा अरण्ये रोदिमि।.... (रोदिति)....

यया :—(नीचैः) क्रूरः खलु अहं यदिमां दृष्ट्वा जीवामि । एनामनुनयामि ।....(कुञ्जाद् बहिरागत्य शर्मिष्ठामुपसृत्य) सुन्दरि ! मा रुदिहि । एष जीवाम्यहं तव दासः ।

शर्मि :—(साश्चर्यम्) राजन्।........ अभिवादये। भवान् कथमत्रत्यः ?

यया :—जानामि तव मयि अनुरागम्....अद्यप्रभृति तव विषादः अस्तङ्गतः। ....अयि जीवितेश्वरि ! आवयोः हृदये प्रथममेव मिलिते।

शर्मि :—देव! अहं शर्मिष्ठेति विचारः विस्मृतः मया....कापि ते दासामनुकम्पा।

यया :—देवि ! अतीतं सर्वं विस्मर। तव नामापि मम जीवितादपि प्रियतरम्।....

शर्मि :—वल्लभ! तव दर्शनादेव पुलकितं मम हृदयम्।

यया :—

चारुस्मिते! क्षिप्रमेहि उदयत्येष चन्द्रमाः।
कुत्राप्यात्मा धावतीव दृढं परिरभस्व माम्॥

---

## चतुर्थम् दृश्यम्

( ययातिः दन्तिलश्च प्रविशतः )

दन्तिल :—भट्टारक! भणामि अद्यैव मम पत्नी एकं पुत्रं प्रासूत। भणति च माम्—स्वामिन्! गच्छ देवयान्याः सकाशम्। कश्चित् ते उपहारम् दास्यतीति।

यया :—वयस्य तर्हि गम्यताम्। उपहारं च प्राप्नुहि।

दन्ति :—राजन्! "अहं शुक्रस्य दुहिता, न जानासि माम्" इत्यादि वदन्ती मामायासयति। भवानिव अहमपि तस्याः बिभेमि।

यया :—वैधेय! नाहं तस्याः बिभेमि।

देव :—तर्हि उद्विजसे इति वदसि ?

यया :—नैतदपि....देवयानी इत एवागच्छति। किं नु नाम स्यात्! एषा अतिमात्रं रुष्टा इव दृश्यते। ....

दन्ति :—राजन्! पलायने भद्रं पश्यामि। ....

यया :—यदि गच्छसि गच्छ त्वम्। परमुपहारस्य किं जायते ?

दन्ति :—भवतः गृह्णामि। एष गच्छामि।....भवानेव अस्य कोपानलस्य शलभः भवतु। (धावति)

(ततः प्रविशति देवयानी)

देव :—दन्तिल! कुत्र गम्यते।....युवां द्वावपि तस्करौ।....एष न निवर्तते।....

यया :—मानिनि! किमिति लघयसि आत्मानम्।

देव :—त्वमेव लघुवृत्तिः यः माम् एवमवञ्चयः।

यया :—ययातिना नैव कदापि एवं चेष्टितम्।

देव :—वञ्चक! स्तेन! प्रमाणमिच्छसि। .... शर्मिष्ठा तत्र प्रमाणं .... तस्यां जाताः त्रयः पुत्राः प्रमाणम्।....

यया :—देवयानि! नात्र किञ्चिदकार्यं पश्यामि।

देव :—कलङ्किन्! त्वादृशानाम् अकार्यं नास्ति।

यया :—अधर्मः मया नाचरितः।

देव :—नास्ति मे शर्मिष्ठाया द्वेष्यतरं वस्तु। त्वं तस्यामासक्तः।

यया :—उन्मत्ते! शर्मिष्ठा मम प्रिया।

देव :—त्वं मम शत्रुः।

यया :—अहं तव जीवितस्य शत्रुः। किं क्रियेत ?

देव :—अनात्मज्ञ! अहं शुक्रस्य दुहिता।....न जानासि मां देवयानीम्।....

देव —एष शापपुरुष यौवनदृप्त शर्मिष्ठासक्तमेन प्रविशति। एष मे मनोरथ पूर्ण । वञ्चक ! इदाना फलमनुभव। (उच्चै हसति)

यया —(प्रबुद्ध शयनादुत्थाय जृम्भत) आ किमेतत् ! किमिति मयि नूतन चैतन्यम् अनुभूयते । (व्याकुलता) क एष दर्पणे स्थविर ? का एषा मम शरीर परिणति । कथमहमेव दर्पणस्थ एष वृद्ध । अहमेव ययाति । सुप्तोत्थितस्य मम इयान् भेद ? ययातिरेवाहम् ? एष वृद्ध ययाति ! ययाते ! किमिदमापतित ते ! यामेव द्वेष्मि सैव जरा मामाविशत्। क्व मे स्निग्धा नीला ते घूर्णालका ? कुत एतानि पलितानि ? कुत्र रमणीय सुललाट मे मुखम्? आयते सम्मोहने मे नेत्रे इदानीम् अदर्शनीये जाते। क्व मे मासलौ भुजौ ? कुत्र विशाल वक्ष ? कुत इय कृशता ? कुत्र मम बाल्यात् आहारेण वर्धित माल्यै गन्धै अनुलेपनैश्च भूषित व्यायामदृढ शरीर ? कुत इद कीकसाना मासस्य रक्तस्य च दुर्बल अयमवशेष ? किमिदमापतित मे! अम्ब ! पश्य तव पुत्रम् अनभिज्ञेय। क्व मे तत् नयनाभिराम सौन्दर्यम् ? दु खमेव मे शरणम्। तात ! पुरूरव ! जनक ! नहुष ! किं करोमि ! उन्मत्तोऽहम्।

यौवने रममाणस्त्व वृद्ध एकपदेऽभव.।
विपाक कस्य पापस्य ? ययाते ! त्यज जीवितम् ॥
ययाते ! त्यज जीवितम् ययाते !

( भूमौ पतति )

## पात्राणि

बिल्हणः—कविः
मदनाभिरामः—राजा
सुमन्त्रः—सचिवः

यामिनी—राजदुहिता
नवमालिका—सखी
शुकवाणी—चेटी

## स्थानम्

प्रासादः—चन्द्रशाला—यवनिका

नवमालिका :—कथं नाम शुकवाणी चिरयति ?

यामिनी :—सखि ! बलवता केनापि कारणेन भवितव्यम् । "अविज्ञाय सर्वं गुरुदेवस्य नाहं मुखमपि ते दर्शयिष्यामि" इति तस्या वचनं स्मरन्त्या मम हृदयम्....

नव :—सखि ! मत्तः अपि यामिनी संवृणोति हृदयम् इति महान् खलु विषादः माम् बाधते ।

यामि :—नवमालिके ! आत्मापि वञ्चनीयः भवति ?

नव :—सखि ! अपूर्वा इयं तव अवस्था । संभ्रान्तेव, केनापि परवशतां नीतेव, विषादे मग्नेव लक्ष्यसे । न खलु अवगच्छामि लेशतः अपि त्वाम् दुःखस्य भाजनम् ।

यामि :—लोकस्य सर्वाणि दुःखानि पुञ्जीभूय मामाश्रित्य धन्यानि भवेयुरिति मे मतिः ।....(निःश्वस्य)....नवमालिके ! नूनं विचित्राणि विधेः विलसितानि ।

नव :—यामिनीपूर्णतिलकापि एवं विषीदति, तर्हि हन्त हतं जीवितम्.... सखि ! क एष वज्रप्रहारः तव मनःकुसुमे ?

यामि :—(स्वगतम्) महाप्रलय इति भण....अहो ! मन्दभागिन्याः अद्यापि मम दक्षिणं नयनं स्फुरति ।

नव :—कान्यपि निमित्तानि दृष्टानि ? कथम् एवंविधा सञ्जाता ?

यामि :—(सहर्षम्) नवमालिके ! गृहाण माम् । सर्वं तं वृत्तांतं स्मारयित्वा मोहे मां प्रक्षिपसि ।....अपि तादृशः स्वप्नः मयि पुनः प्रसीदति ?

नव :—ननु भणामि कीदृशः स स्वप्नः इति येन यथाशक्ति प्रतिविधीयते ।

यामि :—स्वप्नेषु विश्वसिषि त्वम् ?

नव :—अयि मुग्धे ! अविलम्बितं भण कथम् एवम् क्लेशिता ।

यामि :—परचित्तज्ञाने पण्डितेव वदसि.... अद्य प्रभाते मया स्वप्नः दृष्टः। कोऽप्यपूर्वः युवा मधुरैरालापैः मामनुनीय, बाहुभ्यां गृहीत्वा गगने सचरन् काश्मीराननयत्।

नव :—(हसति) सखि ! स्वप्न एषः। (उच्चैः हसति) सर्वाणि अङ्गानि तव कुसुमितानीव भान्ति।

यामि :—नवमालिके ! कठिनासि या एवं भाषसे। काश्मीरेषु कस्यचित् पर्वतस्य धातुमण्डिते सिंहासने मा निवेश्य सः अवदत् "अयि ! सर्वानवद्याङ्गि ! मयि दासे अनुगृहाण" इति।

नव :—न किंचिदतिरिच्यते त्वयि। अद्य जीवितकुसुमस्य फलं समासादयन्तीं यामिनीं दृष्ट्वा परवशास्मि संवृत्ता।

यामि :—सखि ! सस्तम्भय आत्मानम्।

नव :—कुत इति नावगच्छामि। मोदस्य अवसरे खिद्यामि !

यामि :—यत स पुरुष. अकस्मादेव तत्रागतेन कृष्णसर्पेण दष्ट· झटिति भूमौ ...(रोदिति)

नव :—हन्त हतविधे ! क्रूरोऽसि!. .सखि ! समाश्वसिहि।

नव :—तत्क्षणमेवाहं विलपन्ती इतस्ततो भ्रमामि आत्मानं धारयितुं। नवमालिके !

( ततः प्रविशति शुकवाणी ससंभ्रमम् )

शुक :—भर्तृदारिके !

यामि :—शुकवाणि !

शुक :—निर्वृता, स.।

यामि :—मौहूर्तिकानां सकाशं गता !

शुक :—अथ किम्। तत एव शुभोदर्कः तव स्वप्न इति ज्ञात्वा आगच्छामि।

यामि :—शुकवाणि ! किं ते वदन्ति ?

शुक :—ननु भणामि सर्वं मङ्गलमिति ।

यामि :—(सहर्षम्) अयि ! निर्विशेषं कथय ।

शुक :—यतः सा राजपुत्री स्वप्नं सावसानम् अदृष्ट्वैव प्रबुद्धा, ततः महत् कल्याणं भावि इति तेषां वचनम् ।

यामि :—हृदय ! मा उत्ताम्य । कथमहं तेषां वचस्सु श्रद्दधे ?

नव :—सखि ! ज्ञानविज्ञानभासुरं बिल्हणमेव तावत् प्रसादय येन तव अभीष्टं पूर्येत ।

शुक :—भर्तृदारिके ! अद्यगुरुदेवस्य महदनिष्टपूर्वकं शुभं भविष्यतीति अपि तेषा वचनम्....अत एव समयात् पूर्वमेवाहं क्षिप्रमत्रागता ।

यामि :—हृदय ! किंनु खलु स्यात् गुरुदेवानाम् !

(ततः प्रविशति बिल्हणः)

नव :—सखि ! गुरुदेवा आगता एवेति तर्कयामि ।

बिल्ह :—अयि सुधांशो ! नितरां शोभसे त्वमद्य। यामिन्या संगीत-साहित्ययोः समागम इव त्वयि लावण्यमाह्लादकत्वं च शोभेते। यामिनीनाथ ! माम् मन्दभाग्यम् दृष्ट्वा हससि ! (हसति)

चन्द्र ! त्वदीयमभिरम्यमगाधकान्तिम्<br>
निर्वर्ण्य बिम्बमसकृत् मुदितान्तरङ्गः ।<br>
अन्तर्ज्वलामि मलिनाङ्कविलोकनेन<br>
पयोऽयमञ्जलिरनन्तकलानिधे ते ॥

अन्तर्ज्वलामि मलिनाङ्कविलोकनेन· अन्तर्ज्वलामि मलिनाङ्क-विलोकनेन ।

यामि :—किमिति सर्वं नूतनमभिरामं च प्रतिभाति मे । नूनमेष पद्मनेत्रः । कथं नाम अन्यः स्यात् !

बिल्ह :—अथवा एषैव प्राणिनां प्रकृतिः। तादृशीं मूर्तिमतीं प्रतिमां यामिनीं कुण्ठिनीं कृतवतः विधेः किमिव हि दुष्करम् ? (विलपति)

नव :—सखि ! धन्यासि कविना या एवं गण्यसे ।

यामि :—ननु अधन्यासि या कुसुमसुकुमारहृदयं गुरुमेवम् आयासयामि.... गुरुदेव ! सर्वमेतत् कूटपटोः राज्ञः नीतिरिति जानीहि । न भवानन्धः, नाप्यहं कुण्ठिनी ।

बिल्ह :—अथवा मन्दभाग्यस्य मम पुनरेतावदपि न संभवति यदहं तां विलोक्य एते नेत्रे तर्पयामि....

यामि :—सखि ! यथा मम एतस्मिन्ननुरागः तथैव एतस्यापि मयि।

नव :—नात्र चित्रं यदि कुमुदिनी चन्द्रं प्रति स्निह्यति ।

बिल्ह :—यवनिके ! कठिनासि, या त्वम् आवयोः विरहं न गणयसि । यामिनि ! मम हृदये वससि । मां च सीदन्तं दृष्ट्वा दयां न कुरुषे।

संगीतेन मनो विकासयसि मे, वाक्यैः सुधास्यन्दिभिः
कर्णौ सिञ्चसि, काव्यतत्त्वमखिलं जानासि, शास्त्रेषु ते ।
बुद्धिः सूक्ष्मविलोकिनी, ललितया तन्व्या न दृष्टापि माम्
आत्मायत्तमथाकरोस्त्वत्कृते जीवामि मां पालय ॥

अयि सर्वानवद्याङ्गि ! दिव्यमूर्ते ! देहि मे दर्शनम् ।

यामि :—मन्दभागिनी खल्वहं या अत्रभवन्तमेवं परितप्य तपामि । अहमेनमनुनयामि पुरतः गत्वा ।................ यवनिकाम् अपसारयामि । (तथाकरोति)

बिल्ह :—नूनं सा राजदुहिता सत्यदेवैव स्यात् । यदपि नाम न स्यात् अथवा स्यादेव तथापि मे दर्शनीया....यामिनि....(भूमौ पतति)

यामि :—(यवनिकायाः बहिरागत्य विल्हणमङ्के निधाय)....अयि जीवित-नाथ ! नेत्रे उन्मीलय ! संजीवय माम् यामिनीम् ।

विल्ह :—(नेत्रे उन्मील्य यामिन्या गात्रेषु स्पृष्ट्वा) जीवनौषधिः यामिनी ! यामिनि ! कोऽप्यपूर्वः दासेऽनुग्रहः ।

यामि :—चरणदासी खल्वहं भवतः ।

[ भयानकः शब्दः ]

(मदनाभिरामः प्रविशति)

मद :—(सक्रोधम् उच्चैः) पातकिनि ! वंशमात्मानं च कलङ्कयसि । .... अपसर....एतमन्तःपुरदूषकं द्विजाधममचिरेणैव मृतं द्रक्ष्यसि ।—कः कोऽत्र भोः !

यामि :—(रोदिति) राजन् ! एष मम प्राणेश्वरः ! एतेन विना नोच्छ्वसिमि ।

(सुमन्त्रः प्रविशति)

सुम :—किमाज्ञापयति देवः ?

मद :—(उच्चैः) एष वराकः चोरः तत्क्षणमेव वध्यः ।

*सुम :—यदाज्ञापयति देवः । (बिल्हणेन सह निष्क्रान्तः)*

यामि :—( सदुःखम् ) तात ! मामत्रैव खड्गेन छित्त्वा असारात् संसारात् मोचय येन परलोके प्रियेण-सगम्ये ।

मद :—अपेहि कुलपांसनि ! अस्मात् त्वा चोरात् वियोज्य कुलमात्मानं च उद्धरामि ।

[ कोलाहलः ]

सुम :—(ससम्भ्रमः) राजन् ! आश्चर्यमाश्चर्यम् । कोटपालः ब्राह्मणेन सह निवर्तते ।

कोटपाल :—अस्य कण्ठे खड्गः मुक्ताहारो जातः ।

विल्ह :—

अद्यापि तां शशिमुखीं नवयौवनाढ्याम्
पीनस्तनीं पुनरहं यदि गौरकान्तिम् ।
पश्यामि मन्मथशरानलपीडिताङ्गीम्
गात्राणि सम्प्रति करोमि सुशीतलानि ॥

मद :—एष कविः निवर्तते ! हन्त ! अपराधी खल्वहं ! एतं क्षमापयामि । भगवन् ! प्रसीद प्रसीद । क्षन्तव्योऽहम् । भवतः कवितयैव चराचरं जगत् प्राणान् धारयति । तस्मिन् अपराध्य जिहेमि । जाल्मेन मया यत्कृतं तत्सर्वं क्षन्तुमर्हसि ।

विल्ह :—राजन् ! अहमेव अनुगृहीतः ।

यामि :—अहमपि मन्दभागिनी तथैव ।

सर्वे :—यामिनीविल्हणौ यामिनीचन्द्राविव चिरं जीवताम् ।

( नागस्वरम् )



# शोकः श्लोकत्वमागतः

आसीत् महर्षिस्त्रेतायां वाल्मीकिरिति विश्रुतः ।
जितद्वेषो वीतरागः शान्तात्मा सत्यवाक् शुचिः ॥

लोकवृत्तेषु निष्णातः निःसङ्गः सर्वकर्मसु ।
मृदुः कारुणिकः श्लक्ष्णः वश्यवाक् संशितव्रतः ॥

लोककल्याणनिरतः ब्रह्मवादी जितेन्द्रियः ।
अध्यापयन् शिष्यगणान् तप्यमानो महत्तपः ॥

तमसायास्तटोपान्ते तरुगुल्मलतावृते ।
निवेशयामास मुनिः श्रमापहरमाश्रमम् ॥

सृष्टिः सर्वा पुलकिततनुः सर्वदा वेदघोषैः
तिर्यञ्चोऽपि व्यपगततमोवृत्तयो ब्रह्मनिष्ठाः ।
पादन्यासैः परमयतिना पावनी भूमिधूलिः
नित्यानन्दा जनसमुदयस्तत्र वाल्मीकिदेशे ॥

मर्मरे तालपत्राणां नर्तने मत्तबर्हिणाम् ।
आमोदे मधुगन्धानां गुञ्जिते चटुलालिनाम् ॥

कल्लोले निर्झराम्बूनां पुष्पौघे फुल्लशाखिनाम् ।
काव्यकन्या नृत्यतीव सुस्मिता मञ्जुभाषिणी ॥

शास्त्रज्ञाने प्रवचने वाल्मीक्याश्रमपालिताः ।
असङ्ख्याः शारिकाः कीराः त्रैलोक्ये कीर्तिमाप्नुवन् ॥

भरद्वाजादयः शिष्याः सम्पन्नाः सर्वसद्गुणैः ।
वाल्मीकिमाचार्यवर्यमभजन् ज्ञानतत्पराः ॥

* * *

माध्यन्दिनाभिषवणं समाचरितुमेकदा ।
पावनं तमसातीर्थं गन्तुमैच्छन्मुनीश्वरः ॥

कृष्णाजिनं वल्कलं च कलशं दर्भसंस्तरम् ।
गृहीत्वा गुरुदेवस्य भक्तिसम्भृतमानसः ॥

भरद्वाजोऽन्वगच्छत्तं भगवन्तं तपोनिधिम् ।
तावुभावाश्रमान् क्रान्त्वा क्षेत्राणि विविधानि च ॥

आसेदतुर्नदीतीरं तरुराजिविराजितम् ।
इतस्ततो वीक्षमाणो मुनिः परमया मुदा ॥

प्रसन्नवदनो भूत्वा व्यचरद्वनवर्त्मसु ।
देशस्य तस्य निर्वर्ण्य हृद्यं तद्रामणीयकम् ॥

स्वान्ते प्रहृष्टोऽतिमात्रं भरद्वाजोऽब्रवीन्मुनिम् ।
"एते पयोदशकला वायुना मन्दमीरिताः ॥

स्वच्छन्दं सुखमाकाशे विहरन्ति शनैः शनैः ।
गगनं विमलं नीलं प्रशान्तं शिवमूर्जितम् ॥

प्रीतिसञ्जननं रम्यं विशालं रोचते मम ।
कर्णयोर्मे सुमधुरं निःस्वनन्नेष मारुतः ॥

मृदुस्पर्शः क्लेशहरः वाति शीकरशीतलः ।
एकाकिनी शीततोया प्रसन्ना रुचिरा शुभा ।
शुचिर्मन्दगतिर्याति वनेऽस्मिन् तमसा नदी ॥

झिल्लीझङ्कृतिरत्र, तत्र शिखिनां सद्घुष्टमाक्रन्दनं
हंसानामिदमत्र कीरविरुतं मण्डूकपारिप्लुतैः ।

जम्बालाकुलपल्वलेषु निनदस्तत्र द्रुमाणामधः
पत्राणां पततामयं कलरवः सर्वं श्रवस्तर्पणम् ॥

हृष्टाः पुष्टाः पीवराङ्गाः एते मेषाः समूहशः
पर्वतादवरोहन्ति चरन्तो घासमुत्तमम् ॥

रुद्धमार्गाः गिरेः शृङ्गैरुच्छ्रितैः पादपावृतैः
तत्रैव प्रविलीयन्ते नानावर्णाः पयोधराः ॥

बृहत्कायः महानेष प्रस्तरो धातुभूषितः
पर्वताग्रस्थितः स्निग्धः मनो हरति मे भृशम् ॥

क्वचिदुच्चाः क्वचिन्नीचाः दूरदूरविलम्बिनः
स्निग्धाः नीलाः गिरिव्यूहाः हरन्ति हृदयं मम ॥

व्यायतः पृथुलः प्रांशुः पक्षिनीडसमाकुलः ।
वल्लीजालसमाकीर्णः निर्मोकव्रातसंवृतः ॥

पिपीलिकाभिः सरटैः चटकैर्वायसैरपि ।
मुसलीभिर्मक्षिकाभिः निरन्तरमुपाश्रितः ॥

विरूपः बहुलच्छिद्रः प्राणिनां भयकारकः
परिवृत्य तरोर्मूलं वल्मीकोऽयं विराजते ॥

दार्वाघाटस्ताम्रचूडः वृक्षशाखासु संचरन् ।
असकृन् मधुरं वल्गन् मनो हरति मे भृशम् ॥

दिवो मध्यं गाहमानः प्रचण्डो भानुमानसौ ।
विकिरत्यभ्रपुञ्जेषु मयूखान् दूरगामिनः ॥

तमसायाः जले शुभ्रे नीरवे मन्दगामिनि ।
पतन्तः किरणा एते सूर्यस्य बहुभास्वराः ॥

भिन्नाङ्गा इव दृश्यन्ते, विसर्पन्त इतस्ततः ।
दृश्यमेतन्मोदकरमतीव मम रोचते ॥

एकलः सुस्थितो गुल्मे वायुवेगसमीरिते ।
कोकिलो बहुवाचालः एष कूजति मां प्रति ॥

*  *  *

नानानेतृचरित्राढ्यं नानारसनिरन्तरम् ।
प्रत्यक्षरं भावमयं शृंगाररसपेशलम् ॥
विक्रान्तं वीरचरितैः अद्भुतं रोमहर्षणम् ।
करुणार्द्रैः सन्निवेशैः हृदयक्षालनं शुभम् ॥
महारौद्ररसाविष्टम् औचित्यपरिपोषितम् ।
वर्णनैः प्रकृतेः कान्तैरतीव हृदयङ्गमम् ॥
ज्ञानविज्ञानसर्वस्वम् चतुर्वर्गपुरस्कृतम् ।
रामस्य चरितं पुण्यं चकारादिकविर्मुनिः ॥
अमेयध्वनिगम्भीरं मधुराक्षरशोभितम् ।
आकरं काव्यलक्ष्याणाम् रत्नानामिव सागरम् ॥
वर्तमानस्य भूतस्य भव्यस्य च यथातथम् ।
प्रत्यक्षमिव सर्वस्वं दर्शयन् स महान् ऋषिः ॥
निर्ममौ रामचरितमज्ञानतिमिरापहम् ।
रञ्जनं सर्वलोकस्य सदाचारोपदेशकम् ॥
देशकालानवच्छिन्नं कवीनां मार्गदर्शनम् ।
अनाकुलमसन्दिग्धं सदा प्रत्यग्रमुज्ज्वलम् ॥
अनिरुद्धमहावेगं शब्दसंस्कारशोभितम् ।
महर्षेर्जीवितमिव पावनं लोकशङ्करम् ॥
अकर्दमां सुप्रसन्नां नदींवा विमलां शिवम् ।
आर्षेण चक्षुषा पश्यन् स्थावरं जङ्गमं जगत् ॥
प्रसादगुणभूयिष्ठमादिकाव्यं जगौ कविः ॥

रुचिरभणितिरम्य काव्यमार्गोपजीव्य
सहृदयहृदयाना ह्लादन नित्यनूतनम् ।
ललितपदविलास भारतीभव्यभावम्
अमरकविरुदार रामकार्यं व्यधत्त ॥

मुमुक्षूणा मुक्तिकर भक्ताना भक्तिवर्धनम् ।
कर्मयोगमहाभाष्य बुद्धियोगनिरञ्जनम् ॥

स्वभावोक्त्या च वक्रोक्त्या रसोक्त्या सुविभूषितम् ।
वेदवेदाङ्गशास्त्रार्थमगूढ वेदसम्मितम्
श्लोकै लयान्वितै गेय मन श्रवणतर्पणम् ॥

पौरजानपदैर्गीत पौरजानपदप्रियम् ।
लोकाभिराम श्रीराम मर्यादापुरुषोत्तमम् ॥

महापतिव्रता सीता सर्वलोकनमस्कृताम् ।
प्रस्तुवन् राघवकथा निबबन्ध महाकवि ॥

काव्यानामुत्तम काव्य कवीनामुत्तम कवि. ।
रामायणमहाकाव्यं वाल्मीकिर्निर्ममे भुवि ॥



# गान्धिचरितम्

एवमेक वर्षमगाद् विदेशे वसतो मम
इदानीं चक्रतुर्मैत्रा दिव्यज्ञानसमाजिनौ ॥१॥

भ्रातरौ द्वौ मया सार्धं सुहृदावविवाहितौ
गीतामध्येतुमिच्छन्तौ तौ मामूचतुरेकदा ॥२॥

"एड्विनार्नोल्डेन कृतामाङ्ग्ल्या गीतामधीवहे
दिनेष्वेतेषु मित्र त्व कृपया गदतो शृणु ॥३॥

गीता सस्कृतभाषाया मूलभूतामधीहि नौ"
तयोरेवमुक्तवतोर्लज्जा मा भृशमाविशत् ॥४॥

नाह सस्कृतभाषाया गुजरात्यामथापि वा
गीतामधीतवान् पूर्वं कथ साह्य तयोर्भवेत् ॥५॥

विचार्य सर्वमेवेत्थ ह्रिया तावहमब्रवम्
"सस्कृत न हि जानामि पर साह्य करोमि वाम् ॥६॥

यत्र कुत्रापि दोषा स्युरनुवादे विलोक्य तान्
गीता सम्यक् परिज्ञातु यत्नोऽय क्रियते मया" ॥७॥

आरब्ध एव गीताया पाठोऽस्माभिर्बुभुत्सुभि
अध्याये तु द्वितीयेऽत्र श्लोकावेतौ श्रुतौ मया ॥८॥

"ध्यायतो विषयान् पुस सङ्गस्तेषूपजायते
सङ्गात् सञ्जायते काम कामात् क्रोधोऽभिजायते ॥९॥

क्रोधाद्भवति सम्मोह सम्मोहात् स्मृतिविभ्रम
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात् प्रणश्यति" ॥१०॥

श्लोकावेतौ सुमधुरौ सत्यधर्मानुशासनौ
गुञ्जतः कर्णयोर्नित्यं प्रविश्य हृदयं मम ॥११॥

गीताया महिमाऽचिन्त्य इति प्रत्येमि तत्क्षणम्
दिने दिने वर्धते मे धारणैषा हृदि स्थिता ॥१२॥

तत्त्वं जिज्ञासमानानां गीता हि परमा गतिः
सर्वोपजीव्यं लोकेऽस्मिन्निति मे निश्चला मतिः ॥१३॥

उज्जीवयति गीता मां नैराश्येन हते मयि
आङ्ग्लानुवादाः सर्वेऽपि प्रायेण पठिता मया ॥१४॥

एड्विनार्लोण्डस्य कृतिरतीव मम रोचते
नानुवाद इवाभाति अस्य ग्रन्थस्त्वमूल्यवान् ॥१५॥

गीतामध्येतुमधुना नाशक्नवमिति स्थितिः
आरब्धं दैनिकं पश्चात् तस्याः पारायणं मया ॥१६॥

आर्नाल्ण्डेनैव रचितं बुद्धस्य चरितं महत्
भ्रात्रोरेवानुरोधेन मयाधीतं कुतूहलात् ॥१७॥

बभूव बुद्धचरितं गीताया अपि रञ्जकम्
हस्ते गृहीत्वा ग्रन्थं तु नासमाप्य विरम्यते ॥१८॥

ब्लावट्स्कीति वेसण्टेति विख्याते धर्मतत्परे
दिव्यज्ञानसमाजस्थे स्त्रियौ द्रष्टुं गता वयम् ॥१९॥

"विविच्य नाहं जानामि धर्मं कञ्चिदतो हि मे
समाजमेकमास्थातुमयुक्तमिति मे मतिः" ॥२०॥

इत्यत्रवं भ्रातरौ तौ तयोरेव मतानुगः
ब्लैवट्स्कीरचितं ग्रन्थमपठं सकुतूहलः ॥२१॥

हैन्दवं धर्ममाश्रित्य कृतान् ग्रन्थाननेकशः
श्रोतुं च तत्त्वतो ज्ञातुमिच्छा समभवद् हृदि ॥२२॥

पादरीत्यभिधाभाजः खिस्तधर्मप्रचारकाः
अन्धविश्वाससङ्कीर्णं धर्मं हैन्दवमूचिरे ॥२३॥

तेषां तु वचनं मिथ्या न ते सत्यपरायणाः
इत्यजानां मोहतमो निरस्तं हृदयान् मम ॥२४॥

दिनेष्वेतेषु गच्छत्सु ममच्छात्रालये क्वचित्
मान्वेष्टरादथायातमेकं छात्रं व्यलोकयम् ॥२५॥

उद्दिश्य स्वं धर्ममेष मां वक्तुमुपचक्रमे
राजकोटानुभूतिं तु यदा तमहमब्रवम् ॥२६॥

उवाच मां साधुरेष भूत्वा च भृशदुःखितः
"शपे सत्येन मित्राहं न सुरापो, न मांसभुक् ॥२७॥

पिबन्ति मद्यं बहवो मासमश्नन्त्यसंशयम्
जनाः खिस्तमता लोके नैषा सार्वत्रिकी गतिः ॥२८॥

मांसाहारो मद्यपानमव्रतं नैककोऽपि वा
विधीयते क्वचिद्धर्मे तन्मे निगदतः शृणु ॥२९॥

धर्मग्रन्थं बैबिलाख्यं पूतं नोऽवहितः पठ
वेत्स्यसि त्वं सर्वं"नहं श्रद्दधा तस्य भाषितम् ॥३०॥

धर्मग्रन्थं ददौ मह्यं सज्जनः स हितं ब्रुवन्
स पुस्तकानां विक्रेता बभूवेति प्रतीयते ॥३१॥

भूचित्राण्यनुबन्धाश्च नैकेऽस्मिन् सन्ति पुस्तके
प्रावर्तेऽध्येतुमखिलं न बुद्धिः क्रमते मम ॥३२॥

संहितायाः पूर्वभागे उत्पचेरुत्तरोत्तरम्
न काचिद्रुचिरत्पन्ना निद्रा मां सुखमाविशत् ॥३३॥

एषोऽहं बैबिलं जाने इति वक्तुमहं तदा
मण्डलानि च सर्वाणि शिष्टान्यहमथापठम् ॥३४॥

नम्त्रसैंतिप्रकरण नितरा मे न रोचते
न्यूटेस्टमेण्टाभिधया विख्याते भाग उत्तरे ॥३५॥

ईसदेवेनोपदिष्टो गिरिप्रस्थे प्रभावत
धर्मो हृदि न्यविशत सत्याहिंसाप्रतिष्ठित ॥३६॥

गीताया उपदेशेन रिक्तस्य प्रवचाऽधुना
तुलामारोप्य वीक्षेऽहममन्दानन्दनिर्भर ॥३७॥

"प्रावार याचमानाय त्व कञ्चुकमुपानय
प्रहर्त्रे दक्षिणे गण्डे वाम गण्ड समर्पय" ॥३८॥

ज्ञात्वा शुभाशिनमिदमीसदेवस्य सारवत्
भद्दरामरसूक्तानि हृयह मुहुरत्स्मरम् ॥३९॥

चरित बुद्धदेवस्य गीता खिस्तस्य भाषितम्
त्रयमेतत् समन्वेति युवाना मन मानसम् ॥४०॥

त्याग एव परो धर्म इति निश्चयमध्यगाम्
एतस्य ग्रन्थजातस्य पठनेन पुन पुन ॥४१॥

सर्वेषा लोकधर्माणामाचार्याणा विशेषत
जीवितानि वेत्तुमिच्छा बभूव हृदये मम ॥४२॥

हीरोसेण्ड् हीरावर्षिप् नाम कार्लैलनिर्मितम्
ग्रन्थ पठन्नह स्वान्ते महत् सुखमवाप्तवान् ॥४३॥

महम्मदस्य चरित ग्रन्थेऽस्मिन् पठित मया
तपो महत्ता शौर्यं च राजन्ते तस्य सद्गुणा ॥४४॥

एतावदेव मे ज्ञातमासीद् धर्मस्य निर्णये
परीक्षापुस्तकान्येव पठितु मन उत्सुकम् ॥४५॥

व्यरम धर्मविज्ञानादिदानीं कार्यगौरवात्
निश्चित च मयायत्या सर्वान् धर्मान् परीक्षितुम् ॥४६॥

अविदित्वा नास्तिकत्व विदेशे वसतश्चिरम्
ज्ञान मम कथ पूर्ण भवेदिति मतिर्मम ॥४७॥

भारतीया सर्व एव विदुर्नास्तिकवादिनम्
ब्राण्डल नाम तस्यैकमपठ वादपुस्तकम् ॥४८॥

नाम तस्य न स्मरामि तन्मत नापि रोचते
क्रान्त्वा नास्तिकतावादमरु स्वास्थ्यमह भजे ॥४९॥

वसन्ताया यशश्चारु प्रसृत सर्वतोऽधुना
उद्विज्य नास्तिकत्वात् सा पुरास्तिक्यमुपेयुषी ॥५०॥

उदासे नास्तिकाद् धर्माद् वृत्तान्तादहमीदृशात्
पूर्वमेवाहमपठ वसन्तायास्तु पुस्तिकाम् ॥५१॥

अधुनैव मृतो ब्रेड्ले अन्त्येष्टिं तस्य वीक्षितुम्
वोकिंगमहमागच्छ स्मरामि स्फुटमेव हि ॥५२॥

न कोऽपि भारतीयोऽस्ति यो न तत्र समागत
पादर्योऽप्यागता नैके तस्यान्त्येष्टिमवेक्षितुम् ॥५३॥

निवर्तितु गृह शीघ्र रैल सर्व प्रतीक्षते
तत्र नास्तिकतावादी मल्ल कोऽपि समागत ॥५४॥

विवादे रममाणोऽसौ एकमूचे जिगीषया
"भवानेव भद्रमुख ! ईश्वरोऽस्तीति भाषते ?" ॥५५॥

स पादरी शनैराह "भ्रातरेव वदाम्यहम्"
जहासाच्चै स पुरुष त जेतुमिदमभ्यधात् ॥५६॥

"अस्तु जानाति स भवान् पृथिव्या परिधिं खलु
भूगोलं सकलं वेत्ति भवानिति जना विदुः" ॥५७॥

"नास्त्यत्र विमतिर्भ्रात" "तर्हि मा वद सुव्रत !
कियन्मान ईश्वरोऽस्ति ? कुत्र वा तेन भूयते ?" ॥५८॥

"यदि बुध्यावहे मित्र ! आवयोर्हृदयेऽस्ति स"
जेतारं स्वं मन्यमानः सर्वानस्मान् विलोकयन् ॥५९॥

उवाचासौ नर्मगिरा "बालकान् त्वं प्रलोभय
मुग्धान् मूढान् ज्ञानहीनान् बालकान् त्वं प्रलोभय" ॥६०॥

पादरी मौनमापेदे विनयावनताननः
सुदूरं नास्तिकाद् धर्मादेष वादो निनाय माम् ॥६१॥



## नम उक्तिः

१ अदु:खमानन्दघनममृत चिन्मय शुभम् ।
प्रत्यग्रंललित ब्रह्मन् ! जगन्निर्मासि लील्या ॥

२ यत्र शास्त्रमफल वृथा कला
दर्शन हतममार्ग आगम ।
तत्र ते गतिरकुण्ठितोदया
दिव्यमानव ! कवे ! नमोऽस्तु ते ॥

३ त्वमसि जगति वाणीविभ्रमाणा निवास
त्वमसि भुवनजातश्रेयसा पुण्यभूमि ।
त्वमसि सहृदयानामेक आनन्दकन्द
त्वमसि रुचिरमूर्तिस्त्वामह नौमि नित्यम् ॥



# अयमुदेति !

स :—अयमुदेति मन्दमन्दमिन्दुरुदयगिरिशृङ्गात्
पश्य प्रिये !
अयमुदेति मन्दमन्दमिन्दुरुदयगिरिशृङ्गात् ॥
मृदुलहासमधुररोचिरालिप्ताम्बरसरणिः
कौमुदीसुधारसाभिषेकाप्लुतभूवलयः
दिवसखिन्नजगदुल्लासोज्जीवनजीवातुः
भासुरविसृमरकरनिकरापास्तघनतमिस्रः ॥
अयमुदेति .... .... .... ध्रुवम्

सा— अयमुदेति .... .... ....
पश्य प्रिय !
अयमुदेति .. .. ....
सिञ्चति हृदि सुरभिशैत्यमपानुदति दुःखतिमिर-
मङ्कुरयति रागकन्दमुत्सुकयति मम चेतः ।
नयने निर्वर्णयतः रमणीयं रूपमिदम्
स्वान्तं विस्मरति स्वं किं निवेद्यमत्र रमण !
अयमुदेति .... .... .... ध्रुवम्

सः —अयमुदेति .... .... ....
पश्य प्रिये !
अयमुदेति .... .... ....
पर्वतेषु निर्दरेषु पादपेषु शाद्वलेषु
निर्झरेषु पल्वलेषु सिकतासु समीरणेषु
पल्लवशयनेऽस्मिन् परिधाने क्वणदाभरणे
ओष्ठे तव हृदये मम विहरति नृत्यति ज्योत्स्ना ॥
अयमुदेति .... .... .... ध्रुवम्

---

# क्षणमधुना

१ क्षणमधुना निजहितमवधारय
क्षणमधुना तव हितमवधारय
क्षणमधुना

गगनदेशत जलधौ पतित
रागद्वेषौ भीकरमकरौ
भक्षयतस्त्वा सतत कणश
न हि जानीषे आत्मान त्वम्
केय सुप्ति ? प्रतिबुध्यस्व

क्षणमधुना निज ध्रुवम्

२ क्षणमधुना भज परम तत्त्वम्
क्षणमधुना त्यज मनसि जडत्वम्
क्षणमधुना

कुत आगमनम् ? कुत्र च यात्रा ?
धावसि तिमिरे निपतसि गर्ते
किं तव गम्य ? किं तव कृत्यम् ?
स्मरसि कदाचित् न त्व सत्यम्

क्षणमधुना ध्रुवम्

३ क्षणमधुना भव शान्तस्वान्त
क्षणमधुना शुभमार्गं मार्गय
क्षणमधुना

कृताकृताभ्यां गतमनुशोचसि
मरीचिकाभा आयतिरेष्यति
चिन्तातन्त्रै व्यर्थसे सम्प्रति
अवसितमेवं जीवितचरितम्
हससि कदा त्वं ? कदा मोदसे ?

क्षणमधुना .... ... .... ध्रुवम्



# सरभसमेमि वनम्

गोपी—सरभसमेहि वनं मम प्रेयः!
सरभसमेहि वनम्
अकरुण ! चिरयसि कुप्यसि किं मे ?
अदर्शनं तव विषादयति माम्
हृदयमिदं तव नियतं वास !
पालय मा प्रिय ! प्रिया तवाहम्
सरभसमेहि वनम् .. ... .... ध्रुवम्

गोपी (अपरा)—सरभसमेति वनं मम दयितः
सरभसमेति वनम्
अवैमि रागं तस्याहं मयि
अवैति रागं स मेऽपि तस्मिन्
जीवति मयि सः तस्मिन्नहमपि
ज्योत्स्नाचन्द्राविव विलसावः
सरभसमेति वनम् .... .... ध्रुवम्

गोप—सरभसमेमि वनं मम कान्ते !
सरभसमेमि वनम्
कीरमयूरमरालविरावित-
मलिपिकमुखरितकुसुमितपादप-
मनिलाहतकल्लोलितनिर्झर-
मभिनवशाद्वलचञ्चलहरिणम्
सरभसमेमि वनम् .... .... .... ध्रुवम्

गोपी—सरभसमेहि वनं मम प्रेयः !
सरभसमेहि वनम्
आगमनं तव चिरं निरीक्षे
द्रुतमायाहि अभयं देहि
अनुनय मां प्रिय ! मधुरालापैः
मानय सान्त्वय धारय जीवय

सरभसमेहि वनम् .... .... .... ध्रुवम्

गोपी (अपरा)—सरभसमेति वनम् मम दयितः
सरभसमेति वनम्
विहरति हृदये विहसति पुरतः
स्फुरति नेत्रयोः विशति पार्श्वयोः
पुलकितदेहामनिमिषनयनां
न हि मुञ्चति मां क्षणमपि देवः

सरभसमेति वनम् .... .... .... ध्रुवम्

गोपी—सरभसमेहि वनं मम प्रेयः !

गोपी (अपरा)—सरभसमेति वनं मम दयितः

गोपः—सरभसमेमि वनं मम कान्ते !

सरभसमेमि वनम् .... .... .... ध्रुवम्

# उदेति हृदये

१. उदेति हृदये मधुरो भावः
स्मये रमे परवशतामेमि
स्वप्ने दृष्टः न पुनरीक्ष्यसे
विहाय मा प्रिय कुत्र गतस्त्वम् ?
केयमकरुणा तव दयितां प्रति ?
अवलोकय मामीदृगवस्थाम्
उदेति .... ... .... ध्रुवम्

२. उदेति हृदये मधुरो रागः
स्मये रमे प्रियवशतामेमि
आयतनयन सुस्मितवदनम्
मधुरालापं मन्जुलरूपम्
मोहनचरितं जीवितनाथम्
ध्यायामि त्वां सुन्दर ! सततम्
उदेति .... .... .... ध्रुवम्

३. उदेति हृदये मधुरं गीतम्
स्मये रमे तव वशतामेमि
स्मरसि सङ्गतस्त्वममावयोः ?
कथं प्रसीदसि ? कदा दृश्यसे ?
जीवितमधुना रोचते न मे
वल्लभ ! सत्वरमायाहि त्वम्
उदेति .... ... .... ध्रुवम्

---

# अयि मेघाः !

१. कथमयि मेघाः कथयत यूयम्
नीले गगने विचरथ सुसुखम्
कुतोऽपि जाताः कुत्रचिदयनम्
नीयत आयुः चिन्तारहितम्
मन्दं मन्दं स्वैरं धीरम्
सानन्दं वः गगने गमनम्
कथमयि .... .... .... ध्रुवम्

२. कथमयि मेघाः कथयत यूयम्
विमले गगने विहरथ सुसुखम्
क्षणमपि हर्षः क्षणमपि शोकः
जीवितसरणेरहमिहोद्विजे
प्रसरति मोहः सीदति देहः
अश्रुधारया सिक्तमाननम्
कथमयि .... .... .... ध्रुवम्

३. कथमयि मेघाः कथयत यूयम्
विपुले गगने विलसथ सुसुखम्
परहितकरणे विस्मरथ स्वम्
विश्वश्रेयः भवतां जननम्
योगमाचरथ सततं यूयम्
एतदपि स्यात् तत्त्वनिदानम् !
कथमयि .... .... .... ध्रुवम्

# वाचांपते !

१. वाचां पतये विश्वसृजे नमः
रससिद्धाय कवये ते नमः

नीले गगने मेघो भूत्वा
जगदाकलयसि विचरन् स्वैरम्
सागरतुङ्गतरङ्गैः खेलसि
मधुरं कूजसि परभृतकण्ठे

वाचां पतये .... .... .... ध्रुवम्

२. वाचां निधये विश्वसृजे नमः
रससिद्धाय कवये ते नमः

दृष्ट्वा दुःखं जगतः खिद्यसि
समेत्य दीनं मुञ्चस्यस्रम्
स्मृत्वा लोकामङ्गलकारान्
ज्वलसि समुद्दीपितपावक इव

वाचां निधये ... .... .... ध्रुवम्

३. वाचां प्रभवे विश्वसृजे नमः
रससिद्धाय कवये ते नमः

उन्मीलयसि प्रतिभाचक्षुः
दिवमाक्रामसि उडुभिर् विहरसि